# UPAMANACHINTAMANI

BY

GANGESHOPADHYAYA.

## A Celebrated Treatise

ON THE COMPARISON

OF THE NYAYA PHILOSOPHY.

Edited By

PANDIT JIBANANDA VIDYASAGARA B. A.


Calcutta.

PRINTED AT THE SUCHARU JANTRA.

1872

*To be had from Pandit Jibananda Vidyasagara* B. A. *Govt. Sanscrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि ।

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | ... | ३। |
| २ | धातुरूपादर्शः | ... | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ... | ११ |
| ५ | सिद्धान्तबिन्दुसार [वेदान्त] | ... | ॥ |
| ६ | तुलादानादिपद्धति [वङ्गाक्षरैः] | ... | ४ |
| ७ | गयाश्राद्धादिपद्धति | ... | १ |
| ८ | शब्दार्थरत्न | ... | ॥। |
| ९ | वाक्यमञ्जरी [वङ्गाक्षरैः] | ... | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | ... | १॥ |
| १३ | रत्नावली | ... | १॥ |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥ |
| १५ | धनञ्जय विजय—सटीक | ... | । |
| १६ | महावीरचरित | ... | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक | ... | २॥ |
| १८ | वैयाकरणभूषणसार | ... | २ |
| १९ | लीलावती | ... | ॥। |
| २० | वीजगणित | ... | १ |
| २१ | शिशुपालवध—सटीक | ... | ६ |
| २२ | किरातार्जुनीय—सटीक | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड | ... | १ |

# तत्त्वचिन्तामणौ

## उपमानखण्डः।

श्रीमद्गङ्गेशोपाध्याय-विरचितः।

वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागर-भट्टाचार्य्येण
संस्कृतः।

कलिकाता-राजधान्याम्

सुचारुयन्त्रे
मुद्रितः।

१८७२

ॐगणेशाय नमः ।

# तत्त्वचिन्तामणौ ।

---

## उपमान खण्डः ।

तत्र सादृश्यप्रमाकरणमुपमानमिति केचित् । सादृश्यञ्च पदार्थान्तरम् । तथाहि । सदृशव्यवहारादबाधितादस्ति सादृश्यं तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्तेः स्वसदृशत्वापत्तेश्च सुसदृश-मन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च न च व्यञ्जकभूयः सामान्याल्पत्व भूयस्त्वाभ्यां तद्वीरिति वाच्यं बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रासद्धोरदर्शनात् । व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च । नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षित सादृश्याश्रयत्वात् गवयवत् गोरपि स्वसदृशत्वप्रसङ्गात् गोरसन्निकर्षे संयोगवदप्रत्यक्षत्वप्रसङ्गाच्च । प्रत्यक्षत्वे वा गवयनिरूपितसादृश्यस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया चाक्षुषत्वप्रसङ्गः । किन्तु प्रत्याश्रयं भिन्नम् । नचैकैकव्यभिचारादनुगतरूपाभावान्नानुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च नस्यादिति वाच्य मनुगतवित्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वस्माल्लक्षणत्वात्तयोरुपपत्तेः ॥ तच्च द्रव्ये न

गुणः कर्म्म वा गुणकर्म्मवृत्तित्वात् नच सदृशाश्रयवृत्तित्वादेव तत्र व्यवहारः स्वाश्रयवैसादृश्येऽपि तत्र तत्प्रतीतेः। अतएव नाश्रयसादृश्यात्तत् सामग्रीग्रहात् बाधकाभावादविशेषेण वैपरीत्यसम्भवाच्च। नापि सामान्यं तद्धि न सर्ववृत्त्येक मनभ्युपगमात् सुसदृशमन्दसदृशव्यवहारानुपपत्तेश्च। अथ विजातीयत्वे सत्यवयवगुणकर्म्मवृत्ति भूयः सामान्यं तत् अतएव दूरस्थे प्रतियोगिनि भूयः सामान्याज्ञानान्न तत्र सादृश्यप्रत्ययः एवं प्रसाद इतिवत् बहुत्वस्य समुदायस्यैकत्वादेकं सामान्यमिति धीप्रयोगौ अन्यथा वलाद्यपि अर्थान्तरं स्यात् सामान्यबहुत्वाल्पत्वाभ्यां सुसदृशमन्दसदृशव्यवहारः तदुच्यते। सामान्यान्येव भूयांसि गुणावयवकर्मणाम्। भिन्नं प्रधानसामान्यव्यक्तं सादृश्यमिष्यते इति साजात्येऽप्यरविन्दद्वयवत् यमजडयोरवयवादिशून्ये गुणादौ जातौ च सदृशप्रत्ययात् विसदृशयोः करभरासभयोस्तत्सत्त्वाच्च नापि धर्म्यन्तरे धर्म्यन्तरवृत्तिधर्मबाहुल्यम् असाधारणधर्मशून्यत्वे सति तद्गतभूयो धर्मवत्त्वं वा स्वनिष्ठात्यन्ताभावप्रतियोगिधर्मसमानाधिकरण भूयो धर्मवत्त्वं वा त्रिचतुःपञ्चादिभेदेन भूयस्त्वस्याननुगतत्वात्। नापि कपिञ्जलवृत्तित्वपर्य्यवसन्नं विसदृशयोरपि हस्तिमशकयोः सादृश्यप्रसङ्गात्। तदुक्तम्। एवं जातिगुणद्रव्यक्रियाशक्तिषु धर्मतः। एकैकद्वित्रिसमस्तभेदादेकत्र चित्रतेति॥ अथ व्यावर्त्तकधर्म्मापेक्षया तद्गतधर्मबाहुल्यं सादृश्यबाहुल्यञ्च त्रिचतुरादिष्वनुगतं हस्तिमशकयोस्तु बहुव्यावर्त्तकं साधारणन्त्वल्पमतएव भेदाधिष्ठानमुच्यते

इति चेन्न व्यावर्त्तकसमसङ्ख्येनाल्पेना गणितेनापि सादृश्य-व्यवहारात् । किञ्च सामान्यान्याश्रयभेदेनाभिन्नानि भवन्ति सादृश्यन्तु भिन्नम् । सामान्यं निःप्रतियोगिकं तदनिरूप्यञ्च । सादृश्यन्तु सप्रतियोगिकं तद्धीव्यङ्ग्यञ्च । अथ भेदेसति तद्गत भूयः सामान्यवत्त्वं सादृश्यं भेदश्च प्रत्याश्रयमन्यः सप्रतियोगिक-श्चेति चेत्तर्हि सादृश्यस्य भेदघटितत्वेन तस्मात् सदृश इति स्यात् नतु तेन तस्य वा सदृश इति स्यात् । नच सादृश्य-स्यापि सप्रतियोगिकत्वे तस्मात् सदृश इति स्यात् अवधौ हि तथा प्रतीतिप्रयोगौ नतु प्रतियोगिनि अभावेऽपि घटान्नेति प्रतीतिप्रसङ्गात् ॥ अपिच तद्धर्मवत्त्वं यदि सादृश्यं तदा तत्ता-तद्वत्त्वयोः सङ्करप्रसङ्गात् । तद्धर्मवत्ता हि तत्ता तदन्या च तद्वत्ता यदि च तत्तैव तद्वत्ता तदा तदेव तद्वदिति स्यात् । तथाच तद्धर्मवत्ताज्ञाने प्रत्यभिज्ञानवत् सोऽयमिति स्यात् नतु तद्व-दिति । एवं तद्वत्तैव हि तत्तेति गवयेऽपि गोबुद्धिव्यपदेशौ स्याताम् गोगतसामान्ययोगित्वेन गोवत्तत्ताश्रयत्वात् नापि विशेषः प्रत्यक्षत्वात् न समवायः वृत्तिमत्त्वात् । इत्यतिरिक्तं सादृश्यं यत्तु सादृश्यं भावोऽभावो वा भावोऽपि सगुणोनिर्गुणो वा निर्गुणमप्याश्रित मनाश्रितं वा । आश्रितमपि सामान्य-वन्निःसामान्यं वा सामान्यवत्त्वे स्पन्दोऽस्पन्दो वा निर्गुणं निः-सामान्यामाश्रित मनाश्रितमनेकाश्रितं वा । इति यथायथं सप्तपदार्थान्तर्गतमिति तन्न व्यवहारानुपपत्त्या तद्वहिर्भावात् अन्यथैतादृशविकल्पेन सामान्यविशेष समवायानामपि द्रव्या-दित्रयधर्म्मान्तदन्तर्गतत्वं स्यादिति ॥ ० ॥ उच्यते ॥ ० ॥ असाधा-

रणान्यतद्गतबहुधर्मवत्त्वं तस्मादुःखं यमजाद्यादि साधारणं भेदाघटिततया च निरवधि तद्गतबहुधर्मवत्त्वं तन्निरूप्यमिति तन्निरूप्यत्वमेव तस्य सप्रतियोगिकत्वं तथापि सादृश्ये तदेव सप्रतियोगिकत्वं नतु भेददीर्घादिवत्सावधित्वं तस्मात् सदृश इति प्रत्ययापत्तेः। बहुत्वञ्च त्रिचतुरादिसाधारणमिति नानुगमः। न चातिप्रसङ्गः हस्तिमशकयोरपि प्राणित्वसुखित्वदुःखित्वादिना सादृश्यात् अतएव वैसादृश्येऽपि आह्लादकत्वादिना चन्द्र इव सुखं बहुक्षीरत्वादिना महिषीव गौरिति॥ वह्वल्पतद्गतधर्मवत्त्वेन सुसदृशमन्दसदृशत्वम्। अतएव गवये गौसादृश्यं मन्दतद्धर्मवत्त्वमेव विवेचयति वराहं गावोऽनुधावन्तीत्यत्र गौसादृश्यं वराहेऽप्युक्तम्। तत्तद्धर्मवत्त्वेनोपमानोपमेयव्यवहारः काव्यादौ साध्यसाधनवत्तामात्रेण दृष्टान्ते पक्षसादृश्यवाचकवति प्रयोगः परीक्षकाणाम्। न चैते गौणा मुख्ये बाधकाभावात्। तस्मात् केनचित् कस्यचित् क्वचित् सादृश्यं नत्वनुगतमस्ति। किञ्च यादृशबहुतद्धर्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यवहारनियामकमस्तु किमधिकेन। अन्यथा त्रिचतुरादित्वे तु व्यञ्जकमपि बहुधर्मवत्त्वमननुगतं स्यात्। व्यञ्जकमननुगतमपि वह्नौ प्रत्यक्षादिवदिति चेन्न तत्राव्यक्तीनां वैजात्यात् धूमालोकादौ वह्निव्याप्यत्वमेवानुगतम्। अत्रापि तद्व्याप्यत्वमस्तीति चेत् यादृशं तद्व्याप्यं तदेव तद्व्यवहारनिमित्तं नतु तद्गत बहुधर्मवत्त्वज्ञानं न व्यञ्जकमेवानुभवविरोधात् तद्गतभूयोधर्मस्य वह्वल्पत्वज्ञानं विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च। अथ

तद्गतबहुधर्मवत्त्वं न सप्रतियोगिकं सादृश्यं तु तथेति व्यव-
हर्त्तव्यमधिकमिति चेन्न सादृश्यवत्त्वस्यापि सप्रतियोगित्वात्
यत्तु तत्तातद्वत्तयोः सङ्करः स्यादिति तन्न तत्रैव तद्धर्मवत्ता
तदभेदो वा तत्ता साच सोऽयमिति प्रत्यक्षज्ञाने भासते । भेदे
भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं
नतु सइति तयोर्भेदात् । नन्वेवं व्यक्त्यन्तरे गोत्वग्रहे तद्गो-
वदयमिति स्यान्नत्वियमपि गौरिति चेन्न गोत्वमात्रस्य तदन्य-
व्यक्तिवृत्तित्वग्रहे समुच्चयः एकत्वनानासम्बन्धावगमात् । तद्गो-
वृत्ति बहुधर्मज्ञाने भवत्येव शवलावद्धवलेति तथाप्ययमपि
शृङ्गादिमानिति समुच्चयधीः स्यात् नतु गोसदृश इति चेन्न
एकत्रोभयसम्बन्धः समुच्चयोऽल्पगतभूयोधर्मवत्त्वमन्यत्र सादृश्य-
मिति विवेकात् । नवीनास्तु । विलक्षणसुखद्वये इतरसकलव्या-
वृत्तसादृश्यमनुभूयते नतु तद्द्वयमात्रवृत्तिजातिरस्ति तद्द्वया-
भावे जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात् । नापि जन्यं धर्मा-
न्तरमस्तीत्यधिकं सादृश्यमुपेयं तत्रापि समानधर्मवत्त्वव्यञ्जकं
विना कथं तत्र सादृश्याभिव्यक्तिरिति चेन्न प्रतीतिबलात्
द्रव्ये तथा गुणादौत्तु व्यभिचारात् अतएव न व्यञ्जकेनान्यथा
सिद्धिस्तद्भावेऽपि सादृश्यानुभवादित्याहुः । तत्तुच्छं विलक्षणं
सुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि तादृशत्वापत्तेः
किन्तु विलक्षणादृष्टजन्यं तच्चादृष्टं विहिततद्धेतुक्रियाविशेषा-
नुष्ठानादन्येषामप्यस्तीति तेषामपि तादृशानि सुखानि भव-
न्तीति तेषु कारणविशेषप्रयोज्यविलक्षणमस्ति तस्मादात्म-
नामानन्त्यात् अनादिनिधनत्वादुत्पन्नानागतविजातीयं न

सुखमस्ति एवं दुःखान्तरकार्य्येष्वपि नह्यनुत्पन्नमनुत्पत्स्यमानजातीयं कार्य्यमस्ति। यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितं तदपि न नाशकाभावात् अतएव प्रलयेऽपि तदवस्थानम्। अपि चैकत्र प्रतियोगिभेदेन सादृश्यभिन्नं नत्वेकं सुसदृशमन्दसदृशव्यवहारात् तथा च योग्यत्वादेकग्रहे सर्वग्रहप्रसङ्गात्। प्रतियोगिगत भूयो धर्मज्ञानस्य व्यञ्जकस्य क्रमाक्रमे तदेव व्यवहारनिमित्तमित्युक्तम्। किञ्चैवं वैसादृश्यमपि स्यात्। नच सादृश्याभावस्तत् वैपरीत्यस्यापि सम्भवात्। सादृश्याभावत्वेनैव प्रतीतिविशब्दस्य निषेधार्थत्वादिति चेत्तर्हि गौरिव महिषीत्यत्र पावनक्षीरवत्त्वादिना विवक्षित सादृश्यानाश्रये गवये वैसादृश्यं न स्यात् नहि तत्र गोसादृश्यं तदभावश्च। तस्मात् साधर्म्यवैधर्म्ये सादृश्यवैसादृश्ये। यत्तु तद्भिन्नत्वे सति तद्गतानेकधर्मवत्त्वं सादृश्यं तेनाभेदेऽपि गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिवेत्यादौ सादृश्यं न चैवं गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः। तत्र सदृशपदस्य विशेषे तात्पर्य्यात्। अन्यथा महिषेऽतिप्रसङ्ग इति। तन्न। तस्य तेन वा सदृश इति प्रतीतिप्रयोगात् नचाभेदेसम्बन्धः सद्वार्यौ वा सम्भवति। गगनं गगनाकारमित्यादौ तु गगनाद्ये वैसादृशधर्मवत्त्वान्यदित्यत्र तात्पर्य्यम्। यद्वा सर्गान्तरीयगगनसागरयोरुपमानत्वं तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति॥ नन्वयं देवदत्तस्तदन्यो वा भवतु तत्सदृशस्तावदयमिति भेदाभेदसंशयेऽपि सादृश्यनिश्चयात् अतिरिक्तं सादृश्यमिति चेत् न

देवदत्ताभिप्रायगौरूदेशे सादृश्यपदप्रयोगात् कथमन्यथा स एवायं नतु तत्सदृश इति तत्सदृशोऽयं नतु स इति। प्रतीति प्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति युक्तं मुख्ये सम्भवति लक्षणाया अयोगात् तस्मात्त्व पदार्थान्तरं सादृश्यमिति॥ स्यादेतत्। माभूत् पदार्थान्तरं तथापि प्रत्यक्षाच्छब्दाद्वा गवये गोसादृश्यज्ञानात् गवयसदृशो गौरितिज्ञानमुपमितिः। न चैतत्प्रत्यक्षं विशेष्यासन्निकर्षात् नानुमानं लिङ्गाभावात्। नच गवयगतं सादृश्यं लिङ्गम् अपक्षधर्मत्वात्। अथ सदृशद्वयान्तरदर्शने यो यद्गत सादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात्। गौर्गवयसदृश इत्यनुमितिरितिचेत्। व्याप्तिग्रहं विनैव प्रथममपि प्रत्यक्षाच्छब्दाद्वा गोसदृशं गवयं ज्ञात्वा गवि गवय सादृश्यज्ञानोदयात्। किञ्च गविगवयसादृश्यं न साध्यं प्रथमतस्तदप्रतीतेः गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षं विशेष्यस्यासन्निकर्षादिति नानुमितिगम्यं तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेऽनवस्थानात्। नच गौरतद्गवयसदृशः गवयगतभूयोऽवयवादिसामान्यवत्त्वात् गवयान्तरवदिति वाच्यं गवयान्तराज्ञानेऽपि गवि गवयसदृशत्वप्रत्ययात्। अतएव गवयगतगोसादृश्यं गो गवयगतसादृश्यं विनानुपपद्यमानं तत्कल्पयति न हि गोसदृशो गवय एतद्विसदृशो गौरितिवाच्यमिति निरन्तरम्। गवयनिरूपितगोसादृश्याप्रसिद्धौ तेन विनानुपपत्तिज्ञानाभावात् किञ्च। तवार्थापत्तिर्व्यतिरेक्यनुमानं नच गवयगतसादृश्यप्रतियोगित्वं गवि

प्रत्यक्षादिनाज्ञातुं शक्यमित्युक्तम् । नन्वेवं करभे गोवैधर्म्यज्ञानात् गवि करभवैधर्म्यज्ञानमपि मानान्तरं स्यादिति चेत् गवि करभवैधर्म्यं यदि करभवृत्तिधर्म्माभावत्वं तदास्मृते गविप्राङ्गास्तितादिवदनुपलब्धिगम्यमेव अथ करभावावृत्तिधर्मवत्त्वं तदा गोधर्म्मा गविगता एव इदानीं स्मृत गोधर्म्माणां करभेऽभावमात्रमधिकं गम्यं तच्च प्रत्यक्षादेव । अथ तत्प्रतियोगिकैतन्निष्ठ सादृश्ये भासमाने समानसंवित्संवेद्यतया एतत्प्रतियोगिकतन्निष्टसादृश्ये वैधर्म्यज्ञातमिति चेन्न विशेषणविशेष्यप्रतियोगिभेदेन समानसंवित्संवेद्यत्वासिद्धेः । एतत्सदृश एतद्विधर्म्मा स इत्येतद्विशेष्यक प्रत्ययानुदयाच्च तद्विशेष्यक प्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वात् । ननु प्रत्यक्षे विशेष्य सन्निकर्षो हेतुर्न्नतयावद्विशेष्य सन्निकर्षो गौरवात् अन्यथातीतानागतव्याप्य विशेष्यकव्याप्तिप्रत्यक्षं न स्यादिति चेन्न अतीतानागतविशेष्ये सामान्यलक्षणायाः सत्त्वात् । अथ गवयसादृश्यं गवि गवयगतश्टङ्गादिमत्त्वं तच्च गवये गोसादृश्ये भासमाने गवि भावमेव यद्वा गोगतश्टङ्गित्वादे र्गवयगतत्वं गवये गोसादृश्यं एवं तस्यैव गवयगतस्य गोगतत्वं गवि गोसादृश्यं तच्चेन्द्रियेणैवज्ञातसामान्यस्यैकत्वेनेन्द्रियसन्निकृष्टत्वात् अयं स इति विपरीतप्रत्यभिज्ञायामिवेति चेत् सत्यं गोविशेष्यक गवय गतश्टङ्गित्वादिज्ञानं नेन्द्रियजन्यं गोरसन्निकर्षात् तस्मादेतत् सदृश एतद्विधर्म्मा एतस्माद्दीर्घः स इतिज्ञानं नानुमानात् विशेष्यासन्निकर्षे तद्गतलिङ्गाज्ञानात् एवञ्च सप्रतियोगिकपदार्थज्ञानेन तत्प्रतियोगिकपदार्थज्ञानमुपमानं प्रत्यक्षादिक

विनार्थादर्थापत्तौ पूर्व्वेषामुपमानतेतिवार्त्तमेतत् तथा हि । परस्परसदृशं हस्त्यादिकं प्रत्यक्षमतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इतिसामान्यतो व्याप्तिज्ञाने सति गौर्गवयसदृश: तत्सादृश्यप्रतियोगित्वात् यथा भ्राता भगिनी । गवयगतसादृश्य-प्रतियोगित्वञ्च गोर्गवयगतसादृश्यवित्तिवेद्यमेव सादृश्ये गो: प्रतियोगित्वे नैवज्ञानात् अन्यथा सादृश्ये गोरनन्वयापत्ति: यत्तद्भ्यां सामान्यतोव्याप्तिग्रहं विना एतत्सदृश: स इति फला-सिद्धे: यत्तद्भ्यां व्याप्तिग्रहेऽस्माकं व्यतिरेकी परेषामर्थापत्ति-रित्यन्यदेतत्सादृश्यस्योभयवृत्तिधर्मस्य किञ्चिद्विशेष्यसन्निकर्षात् प्रत्यक्षेण भानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वात् । अन्यथा ऽयं स इति भ्रान्तविपरीतप्रत्याभिज्ञायां कागति: । मनसैव चैतन्निष्ठसादृश्यप्रतियोगित्वग्रह: प्रत्यक्षविशेष्यकत्वं परामर्शेन प्रयोजकमित्युक्तम् । कीदृशो गवय इति जिज्ञासायां यथा गौस्तद्वद्गवय इति श्रुतोत्तरवाक्यस्य तथा भूते पिण्डे दृष्टे तथा गवय इत्यतिदेशवाक्यार्थानुसन्धानेऽयं गवयशब्दवाच्य इति मतिरुपमानफलम् न चेयं वाक्यमात्रात् अप्रत्यक्षीकृतपिण्ड-स्यापि प्रसङ्गात् । नापि प्रत्यक्षमात्रात् अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि तयो: सहकारात् सहि प्रमाणसहकारो वा फलसमाहारो वा आद्ये प्रमाणत्वे सति समाहार: समाहृतयो-र्वा प्रमाणत्वं फलानेकत्वे समाहारानुपपत्ते: तस्य परस्परसह-कारिरूपत्वात् नान्य: वाक्यप्रत्यक्षयोर्भिन्नकालत्यात् वाक्यतद-र्थयो: स्मृतिद्वारोपनयेऽपि गवयपिण्डसम्बन्धेनापि इन्द्रिया-दिना तद्गत सादृश्यानुपनये समयपरिच्छेदासिद्धे: । फलसमा-

हारे च तदन्तर्भावे शब्दानुमानयोरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य प्रमाणबहिर्भाव एव। अन्तर्भावे वा कियती सीमा। तत्तदसाधारणेन्द्रियादिसाहित्यम् अस्ति तर्हि सादृश्यज्ञानेऽपि विस्फारितस्य चक्षुषो व्यापारः। न तस्मिन् सति तस्यानुपयोगात् उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यार्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समपरिच्छेदोपपत्तेः। तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानप्रमाणमिति जरन्नैयायिकाजयन्तप्रभृतयः॥ तत्र॥ वैधर्म्योपपत्तेः॥ यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक्करभमतिदीर्घग्रीवं प्रलम्बचपलौष्ठं कठोरं तीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इति प्रत्येति। तत्र किं मानं न तावदुपमानं सादृश्याभावात् नच प्रमाणान्तरं सम्भवति॥ उच्यते। न तावदनुगतं प्रवृत्तिनिमित्तमुपलक्षणं विना प्रत्यभिज्ञानतः शरीरैकत्ववादिनां शरीरविशेषे चैत्रादिपदवदुपेक्ष्यङ्ग्राहिकया गवयपदशक्तिग्रहे गवयान्तरेऽपि सम्भवात्। नाप्यनंध्यक्षे गत्यन्तरोपस्थिते परिभाषाकाशादिपदवत् अतएवाध्यक्षत्वाच्च उपलक्षणस्य च शक्तौ बहिर्भावात् तद्वदेव। नापि योगनिर्वचनात्पाठकादिवत् सोपलक्षणे अन्यथा पाठक्रियानुपहिते पठति न प्रयोगः स्यात्। अतस्तदनुगुणज्ञानादियोगिनि शक्तिः। अवच्छेदकतया तूपलक्षणेऽपीति योगाभावात्। नाप्युपस्थितनिमित्तसङ्कोचनात् स्वर्गादिपदवत् तदभावात्। अतो गन्धाद्युप-

लक्षितेन पृथिवीत्वेन निमित्तेन पृथिव्यादिपदवत् सादृश्याद्युप लक्षिते गवयत्वादौ गवयादिपदानां शक्तिरिति परमार्थतः। अन्यथा फलस्याभास्त्वे मानत्वविरोधात्। नच पूर्वं गवयत्वमुपस्थितमुपस्थापकाभावात् (सादृश्याद्युपलक्षिते गवयत्वादौ) नच गवयपदादेव तदुपस्थितिरन्योन्याश्रयात्। अथ वाक्यादेवानेन समयः परिच्छिन्नः केवलमग्रे प्रत्यभिजानातियोगो सदृशो गवयपदवाच्यत्वेन मयावगतः सोऽयमिति नोपमानस्य विषय इति चेन्न नहि सादृश्यमेव निमित्तमप्रतीतगूनामव्यवहारप्रसङ्गात् गौरवाच्च नापि गवयत्वं तदनुपस्थितेः। अतएव नोभयं स्वयं प्रतीतसमयसंक्रान्तये ऽतिदेशवाक्यप्रयोगानुपपत्तेश्च। गवयत्वेह्ययं व्युत्पन्नो न गोसादृश्ये निमित्तस्य गवयत्वस्य प्रतीतेः। ननु यदा तद्वाक्यं समयपरिच्छेदं पूर्व्वं नाजीजनत् तदा तदेववाक्यं स्मृतं सत्प्रवृत्तिनिमित्तं छेत्स्यति अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्य्यवदातस्य कालान्तरे नववाक्यस्येवास्यप्रागेव बोधितत्वात् पर्य्यवसित इति वाच्यं गोः सादृश्योपलक्षणत्वनिमित्तत्वयोः सन्देहात् पश्चाद्गवयत्वेऽवगते तर्कपुरस्कारात्। सादृश्यस्योपलक्षणत्वे गङ्गायां घोष इत्यत्रेवान्वयो भविष्यतीति चेत् न। उपलक्षणनिमित्तत्वसन्देहेऽपि यो गोसदृशः स गवयपदवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ मानान्तरोपनीतानपेक्षणात् रक्तारक्तसन्देहेऽपि घटो भवतीति वाक्यवत् अन्यथापर्य्यवसितेऽपि वाक्ये मानान्तरसहकारात् तत्तदन्वयबुद्धौ वाक्यभेदापत्तेः। गङ्गायां घोष इत्यत्र तु पदार्थ एवान्वया योग्य इति

युक्तं तत्र मानान्तरापेक्षणम् । यदि च प्रतीतसंसर्गबला-यातोप्यर्थो वाक्यस्यैव तदा वाक्यभेदापत्तिः । अथ तात्पर्य्या-नुपपत्त्यायष्टीः प्रवेशयेतिवल्लक्षणात् गवयपदव्युत्पन्नं प्रति-तद्व्युत्पत्तये वाक्यमात्रेणोक्तं तन्न न प्रवृत्तिनिमित्तोपादानं विना । नच गोसादृश्यं तच्चेति तात्पर्य्यतो गोसादृश्यपदेन गोसमानाधिकरणं गवयत्वमुपलक्षितं कथ्यते ननु यथा धूमो-ऽस्तीत्यत्र वह्नौ तात्पर्य्यमनुमानेन निर्वहतीति न लक्षणा न चात्र प्रमाणान्तरमस्तीति येन तन्निर्व्वाह्यं अनुमानस्या-सिद्धेः । अन्यथान्योन्याश्रयात् नच वाक्ये न लक्षणा तस्याः पदधर्मत्वादिति वाच्यं एकपद एव लक्षणापदान्तरन्तु नियाम-कमित्यस्य वक्तव्यत्वात् । अथ गवयत्वेन लक्षणया तदुप-स्थितावपि व्यक्तिवाच्यता न ज्ञायेत शब्दादिति विशिष्टवाच्यता ग्राहकमानान्तरमवश्यं स्वीकरणीयम् । नच यन्निष्ठो धर्म्मो यत्पदवाच्यः सोऽपि तद्वाच्य इति नियमः । जातिपदे व्यभि-चारादिति चेत् न प्रवृत्तिवद्वाच्यत्वबोधतात्पर्य्यकत्वेन ज्ञा-तीति देशवाक्ये गवयत्वविशिष्टव्यक्तेरेव लक्षणात् । अथ गवयत्वे साक्षात् तात्पर्य्यं गोसादृश्यशब्दस्यग्रच्छेत तदा लक्षणा नच साक्षात् तात्पर्य्यमवधृतम् अन्यथा धूमोऽस्तीत्यत्रापि सा-स्यादिति चेत् न उपस्थापकान्तराभावे तात्पर्य्यस्यैव साक्षात् तात्पर्य्यरूपत्वात् नचोपमानमेव तथा अन्योन्याश्रयात् ॥ मैवं यत्र प्रवृत्तिनिमित्तविषयबोधने न तात्पर्य्यं योगोसदृशः स गवयशब्दवाच्य इति स्वरूपाख्यानमात्रं तत्राप्युक्तसामग्रीतः संशयपरिच्छित्तिर्भवत्येव नच व्युत्पित्सु व्युत्पत्तये प्रवृत्ति-

निमित्तविशेषे तात्पर्य्यं यदनुपपत्तिर्लक्षणावीजं स्यात्। अपिच, धिक् करभमतिदीर्घग्रीवमित्यादिवाक्यस्य (करभमतिदीर्घग्रीवमित्यादिवाक्यस्य) करभनिन्दातात्पर्य्यकस्य प्रवृत्तिनिमित्तपरत्वाभावेऽपि तादृशपिण्डमनुभवतः स्मरतश्च वाक्यार्थमयं करभशब्दवाच्य इति भवति मतिः। नच तत्र प्रवृत्तिनिमित्तविशेषे तात्पर्य्यमस्ति लक्षणाया वीजं निन्दीपरत्वात्। किञ्च सर्व्वत्रान्वयानुपपत्तिरेव लक्षणावीजं यष्टीः प्रवेशयेत्यादावपि प्रकरणादिना पुरस्कारादिप्रयोजनकत्वं प्रवेशनस्यावगतं तादृशे च प्रवेशनादौ यष्ट्यादेरनन्वयात् तात्पर्य्यानुपपत्तेरपि तात्पर्य्यमज्ञात्वा ज्ञातुमशक्यत्वात्। अथ प्रकरणादेरननुगमः तात्पर्य्यव्याप्यत्वेन तदनुगमे तात्पर्य्यानुपपत्तिरेव तद्वीजमस्तु लाघवादितिचेत् न धूमादिवदननुगतस्यापि व्याप्यत्वाविरोधात्। तस्मात् गवयशब्दः कस्यचिद्वाचकःशिष्टप्रयुक्तत्वादिति सामान्यतो निश्चितेऽपि गवयत्वविशिष्टो धर्म्मी गवयपदवाच्य इति लाघवान्निर्णेयम्। तच्च प्रमाणसहकारि नच तस्यां दशायां प्रमाणान्तरमस्त्यतो यत् प्रमाणसहकारि तत्प्रमाणान्तरमास्थेयम्। अस्त्वनुमानं तथाहि गवयशब्दो गवयत्वविशिष्टवाचकः असति वृत्त्यन्तरेऽभियुक्तैः प्रयुज्यमानत्वात् गवि गोशब्दवदितिचेत् न गवयत्वविशिष्टो यो धर्म्मी तस्य वाचकत्वग्रहेऽपि गवयत्वप्रवृत्तिनिमित्तत्वासिद्धेः। नच शक्तिमज्ञात्वा वृत्त्यन्तरं क्वापि अवधारयितुं शक्यते समानाधिकरण्यमात्रस्य निमित्तोपलक्षणतासाधारण्यात्। अथ गोसादृश्यनिमित्ततागौरवस्यान-

वतारेणानोपमानस्याप्यनवतारः । तथा च तर्केण तस्य प्रवृत्तिनिमित्तकत्वेऽवगते गवयपदं गवयत्वप्रवृत्तिनिमित्तकं इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति चेन्न तर्कस्यानिश्चायकत्वात् । न चायं तर्को व्याप्तिग्रहमूलको येन विपर्य्ययानुमानादर्थासिद्धिः । अथ गवयपदं सप्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टमेव तर्कसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं परिच्छिनत्ति न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यते इति चेन्न इदं सप्रवृत्तिनिमित्तकमन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि गवयत्वप्रवृत्तिनिमित्तकं गवयपदमिति मानान्तरं विना प्रतीतेः अनुमितेर्व्यापकतावच्छेदकत्वप्रकारताकत्वनियमात् । अथ यथेच्छायां सामान्यतो दृष्टेन विशेषबाधसहकृतेनान्यद्रव्याश्रितत्वं प्रतीयते अन्यथा विशेषण ( ग्रहस्य तद्विपर्य्ययस्य वा प्रमाणत्वात् ) बाधकानां पृथिव्याद्यैकैकमात्रव्यतिरेकविषयकत्वं जन्यद्रव्यानाश्रितत्वं केन ग्राह्यम् । तथात्रापि गौरवाख्यतर्कसहकृतसामान्यतो दृष्ट्यादितया प्रवृत्तिनिमित्तकत्वं ज्ञायते पश्चाद्व्यतिरेकी स्यात् काप्यप्रमाणान्तरापेक्षया क्लृप्तप्रमाणसहकारित्वस्य युक्तत्वादितिचेन्न इच्छायामेकैकबाधसहकृतापरापरबाधकैरेव तावद्रूपविशिष्टवैशिष्ट्याद्न्यद्रव्यानाश्रयत्वपरिच्छेदात् न तु सामान्यतो दृष्टेन विशेषणतयोपस्थित्यैव विशिष्टवैशिष्ट्यबोधनिर्व्वाहात् तर्कानवतारदशायां तस्य तदपरिच्छेदकत्वाच्च । न च व्याप्तिपरमिदं वाक्यं यो गोसदृशः स गवयपदार्थ इति वाक्यादवगतव्याप्तेरनु-

मिनुयादयं गवयपदवाच्यो गोसदृशत्वात् अतिदेशकालावगत-पिण्डवदिति वाच्यं न हि गोसदृशं ज्ञात्वाऽनेन दृष्टः सपर्कि-शब्दवाच्य इति किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति तथाच यद्योगप्रायमाख्यां तस्यैवार्थत्वं ततः किं तेन। अथ लक्षणापरमिदं वाक्यं किं लक्षणकोऽसाविति प्रश्नार्थः एवञ्च प्रयोक्तव्यं अयमसौ गवय इति व्यवहर्त्तव्यो गोसदृशत्वात् यस्तु न तथा नासौ गोसदृशः यथा हस्तीतिचेन्न न हि हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति सर्व्वप्रयोगस्य दुर्ज्ञा-नत्वात् कतिपयव्यवहारस्यानैकान्तिकत्वात् अथ कीदृक् किं लिङ्ग इति प्रश्नार्थो नह्यनुनलिङ्गमज्ञात्वा गवयपदस्य वाच-कत्वं कस्यचिद्वाच्यत्वमवगतं येन तदर्थप्रश्नः। अथ प्रवृत्ति निमित्तविशेषे लिङ्गप्रश्नौ गवयपदं येन निमित्तेन वर्त्तते तस्य किं लिङ्गमित्यर्थ इति चेन्नहि तदनुमेयमेवेत्यनेन निश्चितं येन तथा स्यात् ज्ञानहेतुमात्रप्रश्ने तद्विशेषेणोत्तर-मितिचेन्न अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत् । वनं गतो द्रक्ष्यति। तस्मान्निमित्तभेदे एवायं प्रश्नः कीदृग्गवयः केन निमित्तेन गवयपदं प्रवर्त्तते गवयत्वस्य साक्षादुपदर्श-यितुमशक्यत्वात् दृष्टस्तदुपलक्षणं सादृश्यमाचष्टे पश्चाद्दृष्टेऽपि पिण्डेऽतिदेशवाक्यं स्मरतस्तर्कसहकारेण गवयत्वविशिष्टो धर्म्मी गवयशब्दवाच्य इति प्रवृत्तिनिमित्तविशेषपरि-च्छित्तिरुपमानफलम् । अथ गौरवेणान्यानिमित्तकत्वे सनिमित्तकत्वादिति व्यतिरेकिण एव गवयत्वप्रवृत्तिनिमि-त्तकत्वधीरितिचेत् न व्याप्तमूलकतया गौरवग्रहस्य तद्विप-

र्थ्यस्य वा अप्रमाणत्वात् तर्कव्यपदेशशक्यप्रमाणसहकारिता-मात्रेण अन्यनिमित्तशङ्कायां कथमुपमानमिति चेत् न गौरव-सहकृतोपमानादेवान्यानिमित्तकत्वे सति सनिमित्तकत्व-परिच्छेदात्। अस्तु गौरवसहकृतात् सनिमित्तकत्वग्राहक-मानादेव गवयत्वनिमित्तकत्वसिद्धिः। न चैवं व्यतिरेक्युच्छेदः। कार्य्यत्वे पर्य्यवसिते बाधकानन्तरं व्यतिरेक्युदयात् यत्र च प्रथमं बाधकालाभस्तत्र कार्य्यत्वादेव फलं न। अन्यानिमित्तकत्वं सनिमित्तकत्वं वेति बुद्धावपि गवयत्वनिमित्तकं गवयपद-मिति बुद्धेरसिद्धेरुक्तत्वात्। किं चात्र व्यवहारेण प्रवृत्ति-विषये पदशक्तिग्रहो नतु तन्निमित्ते तेनाप्रतिबन्धात् नच गौरवादिव्याप्त्यादिनेतरनिरासेन गोत्वादेर्निमित्तत्वग्रहः। गौरवादेरतन्त्रत्वात् अप्रमाणत्वाच्च। तस्मात् व्यक्तौ शक्ति-ग्रह एव लाघवादिसहकृतोऽन्यतरनिमित्तकत्वे सति गोत्वादि-निमित्तकत्वमवधारयति तद्वत्येति देवोपमानमिति कश्चित् तन्न शक्तिग्राहकमेव लाघवादिसहकृतं निमित्तमवधारयति यथा क्षित्यादौ कर्तृग्राहकं कर्तुरेकताम्। अथैवं भिन्नकर्तृकेषु लाघवात् कार्य्यत्वमेककर्तृतां चकोऽपि बोधयत्येव पश्चाद्बाधकेन त्यज्यते इति चेत्तर्हि सहेतोराभासानुमितिः साध्याव्यभिचारा-द्यभावादिति चेन्न बाधितविषयत्वेनाभासत्वात्। अलघुनि लघुत्वज्ञानस्यायथार्थत्वेन तज्जन्यानुमितेराभासत्वाच्च। न चोपमितिरेव व्युत्पत्तिरन्यथा तदनिरुक्तेरिति वाच्यं व्युत्-पत्तेः शब्दसहकारित्वेन मानान्तरत्वेन व्याघातात्। व्युत्-पत्तिस्तु या बुद्धिमासाद्य पदार्थबोधः सा। अन्ये तु यत्तदादि-

पदानामनुगतैकरूपाभावेनैकत्रापि शक्तिग्रहादन्यत्रापि शब्द-व्यवहार इति पदान्तरवैधर्म्यादस्तु मानान्तरमुपमानमिति चेन्न बुद्धिस्थत्वादिनोपलक्षणेन साधारणेन शक्तिग्रहात्। बुद्धिविशेषादेव विशेषपर्य्यवसानं तथैव व्यवहारात् अन्यथा मानान्तरेऽपि दोषः। नह्यनुगतरूपप्रतीतावेव तत्र शक्ति-ग्रहः। यत्तु मात्रादिपदानां जनकस्त्रीत्वादिना शक्तिग्रहे कथं मैत्रमात्रादिलाभः नच समभिव्याहारविशेषादिति वाच्यं पदार्थो हि पदार्थान्तरमन्वेति जनकस्त्रीत्वं च तथेति कथं मैत्रादिना जनकत्वान्वय इति मानान्तरमिति तन्न जनकस्य जन्यापेक्षत्वेन योग्यत्वादिना मैत्रेणान्वयात्। लक्षणं तु उपमिति करणत्वम्। उपमितिश्च जातिः। न चासिद्धिः, कारणविशेषे कार्य्यवैजात्यमप्रयुक्तमिति कारणविशेषव्यङ्ग्य-त्वात् यद्वा नियतधर्मसमानाधिकरणप्रवृत्तिनिमित्तज्ञानमुप-मितिः प्रकारतया शब्दशक्तिग्रहविषयानिमित्तत्वम्। अगृहीत-समयसंज्ञया वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरि-च्छेदोवा। किञ्चिद्वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तप-रिच्छेदो वा। गोसदृशो न गवय इत्यत्रापि परम्परया तत्र तात्पर्य्यमस्त्येवेति सर्व्वमवदातम्॥ शुभमस्तु॥

इति श्रीमहामहोपाध्यायगङ्गेशचिन्तामणिविरचिते श्रीतत्त्वचिन्तामणौ उपमानखण्डः समाप्तः। इति शुभम्।

बि, ए, उपाधिधारिणा श्रीजीवानन्द-विद्यासागर-भट्टा-चार्य्येण संस्कृतः॥

| | | | |
|---|---|---|---|
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ... | ॥। |
| २६ | वाचस्पत्यम् [संस्कृत-बृहदभिधान] | ... | ६० |
| २७ | कादम्बरी—सटीक | ... | ४ |
| २८ | राजप्रशस्ति | ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | | ४ |
| ३० | सर्वदर्शनसंग्रह | ... | २ |
| ३१ | भामिनीविलास—सटीक | ... | १ |
| ३२ | हितोपदेश—सटीक | ... | १ |
| ३३ | भाषापरिच्छेद मुक्तावलीसहित | ... | १ |
| ३४ | बहुविवाहवाद | ... | । |
| ३५ | दशकुमारचरित—सटीक | ... | १॥ |
| ३६ | परिभाषेन्दुशेखर | ... | १॥ |
| ३७ | कविकल्पद्रुम (वोपदेवकृत धातुपाठ) | ... | ॥ |
| ३८ | चक्रदत्त (वैद्यक) | ... | २॥ |
| ३९ | उणादिसूत्र—सटीक | ... | २ |
| ४० | मेदिनी कोष | ... | २॥ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] | ... | २॥ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ... | ॥ |
| ४३ | माधवचम्पू | ... | ।= |
| ४४ | तर्कसंग्रह (इंराजी अनुवाद सहित) | ... | ॥ |
| ४५ | प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) | | १॥ |
| ४६ | विवेकचूड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित] | | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] | ... | ५ |
| ४८ | लिङ्गानुशासन (सटीक) | ... | । |
| ४९ | ऋतुसंहार—सटीक | ... | ।= |

| | | |
|---|---|---|
| ५० | विक्रमोर्वशी—सटीक ... | १॥ |
| ५१ | वसन्ततिलक भाण ... | ।= |
| ५२ | गायत्री [वङ्गाक्षरैः] ... | |
| ५३ | सांख्यदर्शन (भाष्यसहित) सांख्यप्रवचन भाष्य | २ |
| ५४ | भोजप्रबन्ध ... | ॥। |
| ५५ | नलोदय—सटीक ... | ॥= |
| ५६ | ईश केन कठ, प्रश्न, मुण्ड, माण्डुक्य, (उपनिषद्) [शाङ्करभाष्य तथा आनन्दगिरिकृत टीका सहित] ... | ५ |
| ५७ | छान्दोग्य (उपनिषद्) [शाङ्करभाष्य तथा आनन्दगिरिकृतटीका सहित] ... | ५ |
| ५८ | तैत्तिरीय ऐतरेय (उपनिषद्) [शाङ्करभाष्य तथा आनन्दगिरिकृतटीका सहित] ... | २ |
| ५९ | बृहदारण्यक (उपनिषद्) [भाष्यसहित] | १० |
| ६० | सुश्रुत ... | ४ |
| ६१ | शार्ङ्गधर [वैद्यक] ... | २॥ |
| ६२ | वेतालपञ्चविंशति [जम्भलदत्त विरचिता] तथा सिंहासन द्वात्रिंशत् कथा ... | १॥ |
| ६३ | पातञ्जलदर्शन [महर्षि वेदव्यासकृत भाष्यसहित] | ४ |
| ६४ | आत्मतत्त्वविवेक [बौद्धाधिकार] ... | २ |
| ६५ | मुक्तिकोपनिषद् ... | = |
| ६६ | उपमानचिन्तामणि ... | । |

कलिकातासंस्कृतविद्यामन्दिरे—वि, ए, उपाधिधारिणः श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि ।